



# डयते कथमाकाशे ?

( बालललितलीलोद्भावकं काव्यम् )

# Dayatē Kathamākāśhe?

(Bālalalitalīlodbhāvakaṁ kāvyam)

डॉ. राजकुमार मिश्रः

## 'डयते कथमाकाशे?'

तो विश्वनाथस्य अकम्पानुकम्पया मया
काव्यं 'डयते कथमाकाशे?' इत्यभिधानं
हृदयानां पुरस्ताद् उपस्थाप्यते। अत्र त्रिंशद्-
नि सङ्गृहीतानि सन्ति। काव्यस्य अस्य
यथापरम्परं भगवत्याः शारदायाः स्तुत्या
तदनु गुरूपदेशः उपश्लोकितः। गुरूपदे-
सुकुमारमतिषु बालेषु कर्तव्यबोधभाव-
कल्पितोऽत्र। तथैव अतिथीनां कृते
भाववाहि स्वागतगीतमपि रचितं वर्तते,
तु बालसाहित्यदृशा उपयुज्येत। इत्थमेवात्र
विधानं, छात्राणां पक्षिशालायाम् अटनं,
हसा कुतश्चित् समागतं गजं प्रति बाल-
म्, बालरूपस्य कृष्णस्य स्वसखाभिः सह
क्रीडा, आकाशे डयमानं विमानं वीक्ष्य
य मातरं प्रति सकौतुकगर्भः प्रश्नप्रस्ताव-
यः सन्दर्भा मयाऽत्र काव्ये विषयीकृताः।
हृदया एव प्रमाणम् – राजकुमार मिश्रः

978-93-83553-37-2

गुरुवर्याणां चरणकमलेषु
सादरं समुपायनीक्रियते
माल्यपुष्पमिदम्
25-09-17
राजकुमार मिश्रः

# डयते कथमाकाशे?

## (बालललितलीलोद्भावकं काव्यम्)

डॉ. राजकुमार मिश्रः
(सहायकाचार्यः, साहित्यविभागः)
हरियाणा संस्कृत विद्यापीठम्,
बघौला, पलवलम् (हरियाणा)




मान्यताप्रकाशनम्
60-सी मायाकुञ्जम्, मायापुरी
नवदेहली-1100 64 (भारतम्)

**डयते कथमाकाशे? (बाललतितलीलोद्भावकं काव्यम्)**

**डॉ. राजकुमार मिश्रः**


प्रकाशकः वितरकश्च — मान्यताप्रकाशनम्
60–सी, मायाकुञ्जम्, मायापुरी,
नवदेहली –1100 64 (भारतम्)

Tel — 011 - 2540 7546, 2513 7546
9999 88 9290, 98110 14522

mail at — manyataprakashan@gmail.com
manyata_prakashan@yahoo.com





ISBN 13 — 978-93-83559-57-2

Barcode






संस्करणम् — 2015

मूल्यम् — ₹ 325/–

मुद्रक — नेशनल मार्किटिंगस्
998, कटरा मंगलसेन,
चावड़ी बाजार, दिल्ली–6

mail at — rakeshnational@gmail.com

कम्प्यूटरीकृत टंकणम् — प्रिन्ट्रेड्स (Printrads) नयी दिल्ली–64

# Dayatē Kathamākāśhe?

## (Bālalalitalīlodbhāvakaṁ kāvyam)


**Dr. Rajkumar Mishra**
**Asst. Professor, Deptt. of Sahitya**
**Haryana Sanskrit Vidyapeetham,**
**Baghola, Palwal (Haryana)**






**Manyata Prakashan**
**60-C, Mayakunj, Mayapuri**
**New Delhi - 110064 (India)**

**Dayatē Kathamākāśhe?** (Bālalalita līlodbhāvakaṁ kāvyam)

Dr. Rajkumar Mishra

Publishers & Distributors — Manyata Prakashan
60-C Mayakunj Mayapuri,
New Delhi - 110064
Tele — 011 - 2540 7546, 2513 7546
9999 88 9290, 98110 14522
mail at — manyataprakashan@gmail.com
manyata_prakashan@yahoo.com



ISBN 13 — 978-93-83559-57-2

Barcode




Edition — 2015

Price — ₹ 325/-

Printed by — National Marketings
998 Katra Mangalsain
Main Chawri Bazar
Delhi -110006
mail at — rakeshnational@gmail.com

Computer Typesetting — Printrades New Delhi - 110064

प्रो. राजेन्द्र मिश्र
कुलपति (पूर्व)
सम्पूर्णानन्द संस्कृत विश्वविद्यालय,
वाराणसी-221002



दूरलेख - श्रुतम्
दूरभाष कार्यालय 0542-204089
निवास 0542-204213
0542-206617
फैक्स 0542-206617

# नान्दीवाक्

'उड्यते कथमाकाशे' इतिसंज्ञं शिशुकाव्यसङ्कलनं डॉ. राजकुमार-मिश्रोपज्ञमाद्यन्तं परिशील्य परां प्रीतिमुपगतोऽस्मि। जानन्त्येव सुरभारती-वाङ्मयविशारदा यद्बालकवितायाः महन्नैयून्यं वर्ततेऽधिसंस्कृतम्। महता प्रयत्नेन गवेषितेऽपि उदुम्बरकल्पाः पञ्चषाः सन्दर्भा एव समवाप्यन्ते। क्वचिन्मृच्छकटिके रोहसेनवृत्तं, क्वचित्पुनः उत्तररामचरिते लवकुशयोर्यज्ञा-श्वग्रहणवृत्तमित्येवमादीनि अङ्गुलिगण्यानि वृत्तान्येव संलक्ष्यन्ते।

वस्तुतः पाश्चात्यसमीक्षकैः सङ्केतितं तदेव नैयून्यं मनसि कृत्वाहम् इदम्प्रथमतया स्वोपज्ञमहाकाव्ये जानकीजीवनाख्ये सम्पूर्णमपि द्वितीयसर्गं शिशुकेलिसंज्ञं जानकीशैशववर्णनपरैर्वृत्तैः निर्व्यूढवान्। ततोऽग्रेऽपि बाल-साहित्यसंरचनायां निरन्तरमेव दत्तचित्तोऽभवम्। पाण्डिचेरीतः प्रकाशिते बालसंस्कृते १९८२ त इदानीं यावत् शतमितानि बालगीतादीनि मम प्राकाश्यमुपगतानि।

दिष्ट्या साहित्याकादमी दिल्लीस्था बालसाहित्योन्नयने सम्प्रति रङ्गशीर्षमधितिष्ठति। पुरस्कारोपच्छन्दिता अलसाः कवयोऽपि सरभसा इदानीं शिशुकाव्यप्रणयनमनस्का दृश्यन्ते।

परन्तु यथाहं पश्यामि यत् शिशुजनोचितविषयचयनमात्रेण ते

शिशुकाव्यं प्रणयन्ति न खलु भाषादृष्ट्या न वा च्छन्दोदृष्ट्या। अत एव न ते नैसर्गिकाः शिशुकाव्यकवयितारः प्रत्युत कृत्रिमा एव।

शिशुमनसि निमज्ज्यैव शिशुकाव्यं कर्तुं शक्यते न पुनर्विषयचयन-मात्रेण। येषां संस्कृतशब्दानामभिप्रायमेव न जानाति शिशुः, यादृशं सम्प्रत्ययं तर्कं वाचोयुक्तिं वाऽसौ न जानाति यदि कविस्तत्सर्वं प्रयुनक्ति, तर्हि कीदृशी सा शिशुकविता? शिशोः संसार एवान्यादृशः। स एव संसारो वर्णनीयतामर्हति बालकाव्ये।

केषाञ्चिज्जरठमतीनां वरिष्ठानां कुतर्कोऽयं यत् पुरस्कारावाप्त्यर्थं केनचित् बालकाव्येन भवितव्यमेव। को नु लाभो यदि ग्रन्थाऽभावे पुरस्कारो दातुं निश्चितोऽपि नोऽवाप्यते? अत एव कापि रचना परमार्थतः शिशुकाव्य-गुणवती स्यान्न वा, परन्तु साऽवश्यमेव सृष्टा तिष्ठेत् पुरस्कारविपणौ!

भवतु, जयन्ति एवम्मानिनः! हट्टकवयस्ते। डॉ. राजकुमारमिश्रस्य त्रिंशद्बालकाव्यानि प्रकाश्यन्ते। पश्यन्तु गुणपक्षधराः समीक्षका एषां काव्यानां गुणवत्ताम्। नाऽहं किञ्चिदाख्यास्यामि। यो हि ममादर्शो बालकवितायाः स मयोपरि निर्दिष्ट एव।

केवलं समुच्छ्वसितमनसा कवेः काव्यस्य चाऽभिनन्दनं करोमि। सप्रणयम्।

शिमला २४-६-२०१५

- मिश्रोऽभिराजराजेन्द्रः

- मिश्रोऽभिराजराजेन्द्रः

प्रो. राधावल्लभः त्रिपाठी
कुलपतिचरः



राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः)
भारतसरकारमानवसंसाधन-मन्त्रालयाधीनम्
सांस्थानिकक्षेत्रम्, जनकपुरी,
नवदेहली-58

# पुरोवाक्

'डयते कथमाकाशे' इति राजकुमारमिश्रविरचितं बालगीतसङ्कलनं पाठं पाठं परितोषनिर्भरं हर्षमनुभवामि। संस्कृते बालसाहित्यस्य खेदकरो वरीवर्ति अभावः। यद्यपि प्राचीनकाले पञ्चतन्त्राद्याः प्रबन्धा यथा यूनामुपदेशाय तथैव बालनां मनोरञ्जनायाप्यलमासन्निति सत्यम्, तथैव सन्ति शाकुन्तलोत्तररामचरितादिनाटकेषु केचन तादृशाः प्रसङ्गा येषामभिनयो बालनामपि कृते हृदयावर्जकः स्यात्। परन्तु बालमनोविज्ञानस्य अवबोधेन साकं केवलं बालनां कृते एका काचन कृतिः स्वतन्त्रतया निर्मीयेत इति एतादृशी परम्परा अकुण्ठशास्त्रवैभवसम्पन्नैरनूचानैः महनीयैश्च महाकविभिः कामपि काष्ठां प्रापिते पुरातने संस्कृतसाहित्ये विकासमेव न प्राप्तवती। आधुनिके युगे अवश्यं केचन नवीनाः कृतधियः केवलं बालकानामपि कृते सरसं हृद्यं निरवद्यं गद्यं वा पद्यं वा गुम्फनीयमिति तत्र प्रवर्तन्ते। तथापि संस्कृते महती आवश्यकता वर्तते बालसाहित्यसंवर्धनस्य। मिश्रवर्यस्य गीतानि बालनां कण्ठहारतां यास्यन्तीति आशासे।

राधावल्लभः त्रिपाठी
कुलपतिचरः,
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

॥श्री॥

डॉ. प्रभुनाथ द्विवेदी
पूर्व आचार्य, संस्कृत विभाग,
Dr. Prabhu Nath Dwivedi
Ex.-Prof. Deptt of Sanskrit

महात्मा गाँधी काशी विद्यापीठ,
वाराणसी–221002 (भारत)
Mahatma Gandhi Kashi Vidyapith
Varanasi-221002

पत्राङ्क/Letter No :    दिनाङ्क/ Date 27.06.2015

# प्ररोचनम्

रामायणकृते तस्मै वाल्मीकिमुनये नमः ।
आदौ प्रवर्तिता येन लौकिकी काव्यपद्धतिः ॥१॥

काव्यं हितकरं रम्यं सुशब्दार्थनिबन्धनम्।
कीर्तिप्रीतिकरं भाति कविकर्म ह्यनुत्तमम्॥ २॥

बाला वृद्धा युवानश्च येऽपि केचिद् भवन्तु ते।
पाषाणहृदयान् हित्वा केभ्यः काव्यं न रोचते॥३॥

बालाः कौतुकिनो लोके भवन्त्येव स्वभावतः।
सुकुमारा मतिस्तेषां सरलोदारमानसाः॥ ४॥

सुकुमारधियं बालं रुचिं तस्यानुचिन्त्य च।
सत्कविः कुरुते काव्यं हार्दं गीतिलयात्मकम्॥ ५॥

राजकुमारमिश्रोऽयं निपुणः काव्यकल्पने।
कुमारः सुकुमारोऽपि कृतविद्यः कृतश्रमः॥६॥

साहित्ये रमते नित्यं प्रसन्नात्मा यशोधरः।
'भारतभूषणं' भाति यस्य ग्रन्थो मनोहरः॥ ७॥

प्रथयत्यधुना सोऽयं बालगीतचयं नवम्।
'डयते कथमाकाशे' रे मातस्त्वविति संज्ञकम्॥ ८॥

त्रिंशन्मितानि गीतानि संगृहीतानि यानि वै।
विविधं शीर्षकं तेषां बालानां चित्तकर्षकम्॥ ९॥

गीतं गीतं सुगीतं तद् बालानां मुखभूषणम्।
प्रसादं मनसो लाति ततो हित्वा हि दूषणम्॥ १०॥

यथोद्याने सुगन्धीनि नानावर्णमयानि च।
विलसन्ति सुपुष्पाणि गीतान्यपि तथेह च॥११॥

गीतानां विषयाः सर्वे बालानां मोदकारकाः।
मनःस्वास्थ्यं प्रयच्छन्ति ज्ञानविज्ञानसंयुताः॥१२॥

सुबोधा सरला भाषा विशुद्धा वाक्यपद्धतिः।
अहो! तद् रुचिरं भाति गीतानां संविधानकम्॥ १३॥

कविना तत्र गीतेषु नानुचितं चितं पदम्।
पदशय्या ततो भाति सुवर्णघटनोज्ज्वला॥ १४॥

क्वचिदोजश्च माधुर्यं प्रसादः सर्वतस्तथा।
तैस्तैर्गुणैश्च गीतानि सरसानि प्रपेदिरे॥ १५॥

किं गीतमुत्तमं वाच्यं किं गीतं वापि मध्यमम्।
बालानां प्रीतये सर्वं रचितमस्त्यनुत्तमम्॥ १६॥

चिरं तिष्ठतु कण्ठेऽयं हारो गीतसुमोभरः।
गीतोत्कुतुकबालानां पूतगन्धिर्मनोहरः॥ १७॥

कविकीर्तिमयी भूयाद् रचनेयं विकस्वरा।
सौभाग्यमेतु सर्वत्र बालसाहित्यसंस्तवा॥ १८॥

॥ शमिति शम्॥

प्रो. प्रभुनाथद्विवेदी

प्रो. यदुनाथ प्रसाद दुबे
कुलपति
सम्पूर्णानन्द संस्कृत विश्वविद्यालय,
वाराणसी-221002
Vice Chancellor
Sampurnanand Sanskrit University
Varanasi -221002



दूरलेख (Telegram) : श्रुतम्
दूरभाष :
कार्यालय (Off) 0542-2204089
निवास (Resi) 0542-2204213
0542-2206617
फैक्स (Fax) 0542-2206617
ई-मेल (Email) : vc.ssvv@gmail.com

पत्राङ्क/ Ref. दिनाङ्क/ Date 29-06-2015

# वाग्वितानम्

रच्यन्तेऽधुना वाचां देव्याः स्थिरानुग्रहेण संस्कृतसाहित्ये नवनवविधायां चित्तप्रसादनक्षमाः कविताः कविभिः महाकविभिश्च। इदानीं संस्कृतसाहित्ये नवसर्जनस्य यादृग् विकासोऽभ्युदयते तेन नूनमेव कथयितुं शक्यते यदियं दैवी वाक् अधुनाऽपि गङ्गेव धवला अमलाऽक्षुण्णतया विविधसोपानैः समारूढा सती जनानां नेत्रोत्सवं कुर्वती हृदयतोषमारचयन्ती किञ्चिदितोऽपि नवं प्राप्तुकामेव सोत्कण्ठं चाग्रेसरति। संस्कृतसेवाधर्मे रतानां कवीनां मध्ये विविधपुरस्काराणां प्राप्ता डॉ. राजकुमारमिश्रस्तत्र महीयते स्वरचनाकौशलेन विविधेन। मिश्रवर्योऽयं साम्प्रतं संस्कृतवाङ्मयविविधविधासु कविता- गल्ज़लिका-कथा-नाटकाभिधासु प्रभूतं सर्जनं विदधाति इति मनसाऽऽलोच्य प्रसीदति मे चित्तम्। इदानीं कवेरस्य द्वितीयं काव्यं प्रकाशमेति 'डयते कथमाकाशे' इति नामधेयम्। इदं काव्यं मया हृदयेन तदन्तर्गतिन समीक्षितम्। ध्रुवमेव चाऽत्र विराजन्ते रम्यपदशय्या, शब्दानां निपुणतया प्रयोगः, भावसम्प्रेषणप्रवाहमयता, बालसुलभभावानां साधुसमुचित-ललितसन्निवेशश्च सर्वत्र। येन कवेरस्य असाधारणं वैदुष्यं प्रकटितं जायते। नूनमेव काव्यमिदमनागते काले परां ख्यातिं प्राप्स्यति। काव्यक्षेत्रे मिश्रवर्यस्य प्राज्यं साम्राज्यं स्यात्, स्याच्च प्रणयनं बहुविधं नैरन्तर्येणेति विश्वनाथं सान्नपूर्णं कामयमानः मिश्रवर्यं चाशिषा योजयामीति शम्॥

प्रो. यदुनाथ प्रसाद दुबे

प्रो. श्रीधर वाशिष्ठ
पूर्व कुलपति



श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ
(मानित विश्वविद्यालय)
कटवारिया सराय, नई दिल्ली

# पुरोवाक्

बालसाहित्यं कदाचित् भारतदेशे संस्कृतभाषायामेव सर्वप्रथमं रचितम्। तदनुकरणेन च अन्यत्र बालसाहित्यरचनायाः प्रारम्भः सञ्जातः। प्रायः ख्रिस्तपूर्वं द्वादशशताब्द्यां महिलारोप्यं नाम्नि प्रदेशे सुदर्शननामा राजा अवर्तत। तस्य त्रयः पुत्राः - बहुशक्तिः, उग्रशक्तिः, अनन्तशक्तिश्चेति अभिधानयुक्ताः अध्ययने रुचिं न धारयन्ति स्म। अतो राज्ञः सुदर्शनस्य अनुरोधात् विष्णुशर्मा पञ्चतन्त्रम् इति नामकं बालसाहित्यं बालानां सुखबोधाय अरचयत्। येन राजपुत्राः क्रीडया हेलया च क्रीडन्तः पठन्तः राजनीतिं जीवन-व्यवहारं लोकव्यवहारं च अजानन्। पञ्चतन्त्रस्य अनुवादोऽपि पारसीक-भाषायां सञ्जातः। पञ्चतन्त्रस्य सरलीकरणाय नारायणशर्मणाऽपि हितोपदेश-नाम्नी रचना कृता।

एतद् आश्चर्यं यत् त्रिसहस्रवर्षपूर्वं बालसुखबोधाय रचितं साहित्यम् अद्य विशेषज्ञैः पण्डितैरपि सरलतया बोद्धुं न शक्यते। अस्तु नाम ततः प्रभृतिः येन केनापि सरलेन दुर्गमेन वा मार्गेण बालसाहित्यरचनाकार्यं प्रचल-देवास्ति। तस्यामेव परम्परायाम् आधुनिककाले सुकविना डॉ. राजकुमार-मिश्रेण "डयते कथमाकाशे" इति शीर्षकेण एको ललितो बालगीतसङ्ग्रहः प्रकाशम् आनीयते। यस्मिन् त्रिंशद्गीतानि मधुराणि रम्याणि उचितानि उत्साह-प्रदायकानि मार्गदर्शकानि च विलसन्तितराम्। शारदायाः मातुः समक्षम् अयि शारदे! निनादय, इति शीर्षकेण रचिता रचना बालप्रार्थनोपयोगिनी

बालस्वभावोपयोगिनी। गुरूपदेशः, मातुलचन्द्र, भारतबालकानां गौरवप्रतिज्ञा वर्षाकाले मेघदर्शनोत्थः बालोत्साहादिविषयो व्यज्यते रचनायामस्याम्। राष्ट्रध्वजस्य चित्रणम् अतिथीनां स्वागतगानम् समग्रमपि काव्यं बालसाहित्य-परमेव। अवकाशकाले छात्राणाम् अध्ययनात् विरक्तिः मा भूत् एतदर्थं मनोरञ्जनात्मिका प्रहेलिकाऽपि समुपबृंहिता कविनाऽनेन। पिपीलिकायाः अल्पदेहभूतायाः अध्यवसायः नूनमेव बालहितकरः प्रतिभाति। कविः स्वकाव्यविषये इयान् विश्वासवान् यत् स स्वयमेव स्वकाव्यं समीक्षते। कवौ एतादृशो विश्वास एव तम् अन्यस्माद् विशेषयति। अयं विश्वासभावः आधुनिककविषु तथा प्रचुरतया नावलोक्यते। कवेः विश्वासभावः द्रष्टुं शक्यते-

> हर्तुं बालमनः काव्यं कथं नालं भविष्यति।
> बाल्यं हित्वाऽधुनैव स्वं यस्य जातो युवा कविः।

कविरयं स्वकाव्यविषये एतदर्थं विश्वासवान् वर्तते यतः स युवा वर्तते यश्चाधुनैव अर्थात् त्वरितमेव स्वबाल्यं त्यक्त्वा युवा सञ्जातः किं वा साहित्याकादमीद्वारा युवपुरस्कारेण सभाजितो जातः। अतो बालकालिकाः सर्वा अपि स्मृतयः तस्य मानसे अक्षतं तिष्ठन्ति। अतः रचनायाम् आयासः अधिको न विधेयो वर्तते तेन। कविः स्वप्रस्तुतबालकाव्यसङ्ग्रहेण स्वप्रतिज्ञां पूरितवानेवेति मन्येऽहं हृदयेन। शिवः पूरयतु कवेरस्य आशाम् इति शुभाशंसां कृत्वा विरम्यते।

प्रो० श्रीधरवाशिष्ठः

प्रो. श्रीधरवाशिष्ठः (कुलपतिचरः),
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्,
नवदेहली

# प्ररोचना

संस्कृत साहित्य में स्वतन्त्र रूप से बाल साहित्य की कृति अत्यल्प मात्रा में उपलब्ध है। यत्र तत्र महाकाव्य, नाटक में यदि प्रकरण वशात् बाल साहित्य उभरा है तो केवल इतिवृत्त के निर्वहण के कारण ही। यदि इसे संस्कृत साहित्य की न्यूनता मान ली जाए, तो कवियों के द्वारा इस विधा में भी पर्याप्त रचना करना आवश्यक हो जाता है। किन्तु कवियों की आसक्ति बाल साहित्य के प्रणयन में नहीं देखी जा रही है। प्रायः यही स्थिति देश की अन्य भाषाओं में भी देखी जा सकती है। यदि इसका कारण जानने की चेष्टा करें, तो देश, काल, परिस्थिति की बात सामने आती है। पहले महाकाव्यादि विधाओं में रचना करने का प्रचलन होने के कारण बाल साहित्य स्वतन्त्ररूप से प्रबन्ध का आकार धारण नहीं कर सका। तो वर्तमान में, बाल साहित्य का अभाव, आज के समय में व्यक्ति की जीवन-शैली में आए बदलाव तथा इस बदलाव से बदले कवियों के चिन्तन के होने से है। आज का व्यक्ति अपने अनुकूल परिस्थिति का निर्माण करने में इतना तल्लीन हो गया है कि वह अपने अतीत की अनेक मधुर स्मृतियों से ओझल होता चला जा रहा है। आज के समय में उसे

अपना शैशव भी ठीक से याद नहीं रहता। हद तो तब हो जाती है जब आज का पिता अपने बच्चे के शैशव को देखकर भी उसमें अपने शैशव का सादृश्य नहीं ढूँढ पाता! जब शिशुशैशव-रूप उत्तेजक वस्तु के होने पर भी व्यक्ति उससे प्रभावित नहीं हो पाता, तो समझा जा सकता है कि वह किस मनोभूमि पर बैठा हुआ है। यह भटकाव या विस्मृति, समय चक्र के कारण ही है। आज का समय अर्थ प्रधान हो गया है, बस इसी अर्थ की पूर्ति में पूरा जन मानस व्याप्त है। धनार्जन को लेकर चारों ओर मारामारी है जिससे- गरीबी, भुखमरी, बेरोजगारी, मँहगाई, सम्बन्धों में दरार, हिंसा, लूटपाट, हत्या आदि विसङ्गतियाँ उभरी हैं। और व्यक्ति इसी में घिरा-२ दिखता है। अब जब कोई खाली हो, तब न अपने अतीत की मधुर स्मृतियों को याद करें। किसी प्रसिद्ध शायर की ये पङ्क्तियाँ शायद इसी मर्म को प्रकट कर रही हैं- 'कल सुलझा दुँगा जुल्फें तेरी, आज उलझा हूँ वक्त को सुलझाने में'।

आज के व्यक्ति के पास समय नहीं है, लोगों का जीवन, अपनी आवश्यकता की पूर्ति में बदस्तूर लगे रहने के कारण इतना व्यस्त हो गया है कि उसे विश्राम कहाँ- 'क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः'। बस, यहीं से व्यक्ति मानसिक तौर पर कमजोर होता चला जाता है। आज के प्राणी को काम की कुछ आवश्यक बातें याद रहने के अलावा अन्य कोई चीज याद नहीं रहती। भोजपुरी की सूक्ति इसी सन्दर्भ को दर्शा रही है-

भूल गइल बान बट्टा भूल गइल चौकड़ी।
तीन चीज याद भइल नून तेल लकड़ी।।

जनमानस के रोटी पानी के जुगाड़ में बेचैन रहने के कारण जो

विसङ्गतियाँ ऊपर रेखाङ्कित की गई हैं वे मानो जीवन में शाप की तरह हैं जिसमें बँधा प्राणी न कुछ सोच पाता है न कुछ कर पाता है। जब केवल एक विसङ्गति के कारण कालिदास का यक्ष, कुबेर से शाप मिलने के पश्चात् अपनी प्रियतमा यक्षिणी को चित्र में भी देख नहीं पाता – 'क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः'। तब आज का प्राणी जाने कितने विसङ्गति–शापों से घिरा हुआ है, वह क्या याद रख पाएगा अपनी स्मृतियों को! बस, इन्हीं विसङ्गतियों के फेर में फँसा आज का कवि भी है। उसका हृदय जब सन्तप्त होता है तो आज के जन मानस की स्थिति ही उसकी कविता का विषय बन जाती है क्योंकि कवि प्रायः वही लिखता है जिस समाज में वह जी रहा होता है। सम्भवतः इसी कारण, कवियों का मन बाल साहित्य की रचना में प्रवृत्त नहीं हो पाता, क्योंकि कवियों का समुदाय प्रायः समाज की विसङ्गतियों को सुलझाने में स्वयं उलझा हुआ है। फिर भी कुछ ऐसे कवि हैं जिन्होंने अपने आपको समाज की विसङ्गतियों, झञ्झावातों से कुछ समय के लिए दूर कर अपनी पुरानी स्मृतियों का स्मरण किया और चिन्तन किया कि उसके जीवन के सबसे अच्छे दिन कौन थे? कैसे थे? तो उसे शैशव की स्मृतियाँ याद आती हैं, उसे वह गुजरा समय बहुत अच्छा लगने लगता है–

क्व याताऽधुना शर्वरी सान्त्वनानां
प्रसुप्तं निरातङ्कमङ्के जनन्याः ॥

बस यही अनुभूति सहसा कविता के रूप में फूट पड़ती है और बाल साहित्य का आकार धारण कर लेती है। उपर्युक्त जो बातें मैंने अन्तः प्रमाण से की है उन्हीं को आगे सिद्ध करने का प्रयत्न मैं प्रो. अभिराज राजेन्द्र मिश्र जी के बाल साहित्य के माध्यम से करना चाहूँगा। प्रो. अभिराज

राजेन्द्र मिश्र के साहित्य की पर्यालोचना करें तो उन्हें अपने जीवन में शैशव का स्मरण दो अलग-अलग परिस्थितियों में हुआ दिखता है, क्योंकि प्रो. मिश्र ने संस्कृत में प्रथमतया 'कौमारम्' शीर्षक से बालसाहित्य का प्रणयन किया, जो प्रबन्ध काव्य है। इस कृति के अलावा भी बाल साहित्य का दर्शन उनकी अन्य कृति- 'जानकीजीवनम्' में भी प्रकरण-विच्छित्ति से परिलक्षित होता है। इसमें 'कौमारम्' का प्रणयन, बालसाहित्य की रचना के परिप्रेक्ष्य में दर्शाये गए उपर्युक्त आधार पर ही हुआ है, तथा जानकीजीवनम् में जो बाल साहित्य वर्णित है वह इतिवृत्त के निर्वहणार्थ ही है। और इस सीता विषयक बालसाहित्य में कवि का भी शैशव अनुस्यूत अभिव्यक्त होता है, क्योंकि कवि को इस महाकाव्य में भगवती सीता के शैशव का वर्णन करने की वेला में अपने शैशव की भी स्मृति होती है। प्रो. मिश्र सीता के शैशव का वर्णन करने में इतने तल्लीन हो जाते हैं कि वे सीता को अपनी सखियों के साथ मिट्टी की चक्की (जतोला) में मिट्टी पीसने की क्रीडा करती हुई दिखलाते हैं -

**क्वचिद् विनिर्माय मृदाघरट्टकं समं वयस्याभिरभीष्टरञ्जिनी।**
**मृषैव मृत्पेषणकम्रलीलया कुतूहलं सा विदधेऽवरोधीनाम्।।**

इस वर्णन में सीता, मिट्टी के जतोले से क्रीडा कर रही हैं कि नहीं, पर कवि की क्रीडा का साधन, यह मिट्टी का जतोला अवश्य रहा होगा।

इस तरह दो परस्पर भिन्न अवस्थाओं में बाल साहित्य की सर्जना देखने को मिलती है। समस्त सांसारिक प्रपञ्चों से मुक्त कवि, जब अपने शैशव का स्मरण कर रहा होता है, तब उसकी स्मृतियाँ, हृदय के प्रपात से बहते हुए सीधे लेखनी में गिरती हैं जो शब्द का आकार ले लेती हैं। यही बाल साहित्य कहलाता है तथा जब कवि, महाकाव्य-नाटकादि विधाओं

में रचना कर रहा होता है, तो उस रचना में प्रकरण मर्यादा से बाल साहित्य उभर सकता है जैसे- 'अभिज्ञानशाकुन्तलम्', 'उत्तररामचरितम्' में। मेरी बाल साहित्य की यात्रा भी कुछ इसी तरह की है। बाल साहित्य पर काम करने का सुझाव प्रो. अभिराज राजेन्द्रमिश्र जी ने मुझे वाराणसी में २०१२ में दिया था। उन्होंने कहा कि- 'इस विधा पर समकालीन संस्कृत में कार्य अपेक्षित मात्रा में नहीं हो पा रहा है, आप जैसे युवाओं को इसमें कार्य करना चाहिए'। पर उस समय मेरा मन इस कार्य में प्रवृत्त नहीं हो पाया। मैं अन्यान्य विधाओं में सामाजिक दुरवस्थाओं का चित्रण करने में व्यापृत था। एक दिन किसी उत्तेजक वस्तु को पाकर मैंने आत्मचिन्तन करना शुरु किया कि पहले वाले दिन बीत गये। जहाँ आज जैसी स्थिति नहीं थी। कैसी आनन्द की धारा बहती थी उन्मुक्त मन में, उन्मुक्त सदन में, उन्मुक्त गगन में। जहाँ चन्द्रमा से भी सीधा रिश्ता होता था- चन्दामामा कहकर। कितना कौतूहल रहता था किसी नई वस्तु को जानने में, किसी अधसूनी बात से जुड़ जाने में। उस समय अप्सराओं (परियों) को प्रत्यक्ष देखने की आकाङ्क्षा मन को रोमाञ्चित कर देती थी। मन में किसी बात को लेकर चिन्ता नहीं थी। चिन्तन की इसी श्रृङ्खला में सहसा मेरे भीतर का कवित्व जागा। और मैंने अपने बाल सुलभ अनुभवों को लिखना आरम्भ कर दिया, जो पाठकों के सामने है। इस बाल साहित्य की विशेषता यह है कि इसका कवि अभी ही अपने बचपन को बिताकर युवा बना है। इस कारण कवि के हृदय में बचपन की सारी स्मृतियाँ विद्यमान हैं, इससे सहृदयों का हृदय अनुरञ्जित होगा, यह भी विश्वास है-

हर्तुं बालमनः काव्यं कथं नाऽलं भविष्यति।
बाल्यं हित्वाऽधुनैव स्वं यस्य जातो युवा कविः॥

मैंने इस बालसाहित्य के शीर्षक (डयते कथमाकाशे) का चयन अपने शैशव की स्मृति के आधार पर किया है। जब बचपन में मैं अपने घर की छत पर बैठा, आकाश में उड़ते विमानों को देखा करता था, उस समय कौतूहल-वश माता से पूछता था कि यह विमान कैसे उड़ता है? क्या इसमें सवार सभी यात्री आकाश में रहने वाले देवताओं तथा परियों को भी देखा करते हैं? इसका चालक तो अवश्य ही कोई वीर होगा, जो इसे इतनी ऊँचाई पर ले जाने से भी नहीं घबराता है।

इस बाल साहित्य के लिए मेरे आत्मीय गुरुजनों ने अपना सम्मति पत्र आशीर्वाद के रूप में प्रदानकर कृतार्थ किया है। सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी के यशस्वी पूर्व कुलपति, संस्कृत साहित्य के सर्वमान्य हस्ताक्षर, साहित्यिक समस्त पुरस्कारों से श्रीमण्डित, मेरे भावी भव्य को साकार देखने के अभिलाषी, महाकवि, गुरुवर प्रो॰ अभिराज राजेन्द्रमिश्र जी ने बाल साहित्य विषयक अपना सम्मति पत्र प्रदान करने के अवसर पर उसकी मातृका में कतिपय स्थलों पर संशोधन कर प्रकाशन करवाने का निर्देश भी दिया इसलिए मैं प्रह्वीभाव से कृतज्ञता प्रकाशित करता हूँ। राष्ट्रीय संस्कृत संस्थान, नई दिल्ली के पूर्व कुलपति, संस्कृत साहित्य के प्रखर समीक्षक, नव-नव-चिन्तन-परायण प्रो॰ राधावल्लभ त्रिपाठी जी का आशीर्वाद प्राप्त हुआ, एतदर्थ मैं आनतभाव से कृतज्ञता व्यक्त करता हूँ। काशी परम्परा के संवाहक देश के प्रसिद्ध कथाकार, समीक्षक प्रो॰ प्रभुनाथ द्विवेदी जी ने अपने आशीर्वाद पत्र के अलावा मातृका के कतिपय स्थल को संशोधित कर मेरे आत्मविश्वास को बढ़ाया, अतः मैं कार्तज्ञ्य निवेदित करता हूँ। सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी के कुलपति, गुरुकल्प प्रो॰ यदुनाथ दुबे के प्रति मैं कृतज्ञता ज्ञापित करता

हूँ। श्रीलालबहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, नई दिल्ली के पूर्व कुलपति तथा वर्तमान में अपनी संस्था के चेयरमैन प्रो. श्रीधर वासिष्ठ के प्रति मैं प्रोल्लसित भाव से कृतज्ञता व्यक्त करता हूँ जिन्होंने इस कृति हेतु आशीर्वचन देने की कृपा की।

इस बाल साहित्य का उदय ही नहीं हो पाता, यदि मुझे यह जीवन नहीं मिला होता। मैं अपने इस जीवन को विशेष मानता हूँ कि इस जीवन में माँ सरस्वती की कुछ सेवा करने का अवसर मिल रहा है। इसलिए मुझे ऐसा सारस्वत-सेवोन्मुख जीवन देने वाली माँ श्री आशा मिश्रा, पिता- श्री रामसागर मिश्र के प्रति मैं कृतज्ञता व्यक्त करता हूँ तथा इस कृति को मैं अपने माता-पिता के श्रीचरणों में समर्पित करता हूँ क्योंकि मेरी दृष्टि में मेरे माता-पिता ही इस कृति के सर्वोत्तम अधिकारी हैं। उन्होंने जैसा जीवन दिया, जैसा पाला, पोषा, रखा, मैं तो बस वैसा ही हो गया। मेरा अस्तित्व ही क्या था, मिट्टी के भाँति आया था इस संसार में, पर मुझे उन्होंने पात्र (घड़ा) बनाया। अब सोचता हूँ कि जब मिट्टी का पात्र हूँ ही, तो फूटने के पहले इस जीवन में कुछ अच्छा करने का सौभाग्य भी प्राप्त कर लूँ। माता-पिता ने बचपन में खेलने हेतु यथासम्भव जो वस्तुएँ उपलब्ध करायीं, वे मेरे लिए मेरे सन्तोष भाव के कारण पर्याप्त थी, उससे आगे की आकाङ्क्षा रखी होती और वह मिल गई होती तो शायद मुझे कुछ पाना शेष नहीं रहता। इस बालसाहित्य में शैशव में मिली उन्हीं वस्तुओं, अनुभवों तथा परिदृश्यों का वर्णन है। इसके अतिरिक्त जिन वस्तुओं को माता-पिता उस समय नहीं उपलब्ध करा सके थे उन वस्तुओं को फिर से पाने की उत्कट उत्कण्ठा भी है जिसमें- चन्दामामा से मिलने की आकाङ्क्षा, परियों को देखने की उत्सुकता समाहित है। इस कृति में

जो मेरा शैशव अभिव्यक्त होगा वह माता-पिता के लिए मेरे उस शैशव की याद दिलाने में पर्याप्त होगा, क्षण भर के लिंए उन्हें मैं पहले वाले शिशु के रूप में दिखलाई दूँगा, जिससे न केवल उन्हें परितोष होगा, बल्कि मुझे भी।

'गृह कारज नाना जञ्जाला' के फेर में फँसा सम्भवतः मेरा बालसाहित्य विषयक चिन्तन, मन में ही समुद्र के कल्लोल की भाँति प्रादुर्भाव तथा विनाश को प्राप्त हो रहा होता, यदि मुझ पर गृहकार्य के सम्पादन का अतिरिक्त बोझ डाल दिया गया होता। अतः मैं अपनी नित्य-सहचरी, द्वितीय-हृदय प्रीति मिश्रा को हृदय की गहराई में प्रविष्ट होकर उनकी इस सदर्थित सहयोग भावना के लिए साधुवाद वितरित करता हूँ।

मैं मान्यता प्रकाशन के अध्यक्ष, बन्धुरत्न राकेश मनोचा जी को स्निग्ध हृदय से धन्यवाद देता हूँ जिन्होंने दिन-रात बड़े परिश्रम से इस पुस्तक को आकर्षक रूप में प्रकाशित किया, जिससे इस पुस्तक की बालविषय-ग्राहिता, उपादेयता, सम्प्रेषणीयता में श्रीवृद्धि हुई है।

विजयादशमी
अक्टुबर २०१५

विद्वद्वशंवद
राजकुमार मिश्र

# विषयानुक्रमणिका



श्रीविश्वनाथो विजयते

उत्तरप्रदेशीयवाराणसीजनपदान्तर्गतकठिराँवसंवसथस्थेन श्रीरामसागरमिश्रसूनुना आचार्यराजकुमारमिश्रेणाऽभिनवं प्रणीतम्

# कविकृतमङ्गलाचरणम्

यया शक्त्या लोके प्रवहति कवीनामिह मुखा-
दजस्रं काव्यानाममरतटिनीवाद्भुतगुणा।
यया वा निर्ध्वान्ताः सकलमनुजाः सैव निखिलान्
विकारान् सम्मार्ज्य प्रथयतु सुखोद्रेकमचिरम्॥



# कविप्रतिज्ञा

हर्तुं बालमनः काव्यं कथं नाऽलं भविष्यति।
बाल्यं हित्वाऽधुनैव स्वं यस्य जातो युवा कविः॥

लयानां विलयो नास्ति मात्राणां गणना समा।
बालसुलभभावानां सङ्गमोऽत्र मनोरमः॥

प्रसन्नतामेष्यति बालकः स्वतो
विभाव्य काव्यं न यशोऽस्तु तत्र मे।
स्मरिष्यति द्रागविबोधितोऽपि सन्
कथां स वृद्धः प्रथमं कृतां ध्रुवम्॥

न शोभिता मेऽस्ति गुणै रसैर्नवै-
र्न वा नवाऽलङ्कृतिसंस्कृतिः कृतिः।
तथापि तुष्यन्ति बुधास्तदा कृपा
गुरो रमाशङ्करशङ्करस्य[1] मे॥

---

१. शङ्करोतीति शङ्करः, रमाशङ्करः (एतदभिधो गुरुविशेषः) चासौ शङ्करः (कल्याणकृत्) चेति रमाशङ्करशङ्करः, तस्य रमाशङ्करशङ्करस्य, इत्यर्थः॥

ममास्ति विश्वासवचो दृढं हि यद्
गुणप्रवाहाद् हृदयाद् विनिर्गतम्।
कृतेरवश्यं सुधियां धिया भवेत्
परीक्षणं येन समुद्भवेन्नवम्॥

यदि रचनेयं सरला, तर्हि कोमलबुद्धीनां
कृतेऽवश्यं भवतु बालानाम्।
अन्यथा कुशलवाविव कुशला बालाः
सन्ति वा भविष्यन्ति बिम्बग्राहे मणिनिभाः॥



१

# अयि शारदे! निनादय



अयि शारदे! निनादय वीणां रसाभिषिक्तां
शरणागतो भजे त्वां कमलासनोपविष्टाम्

बालोऽस्म्यहं त्वदीयो घोरान्धकारमग्नः

प्राप्तुं प्रभाप्रवेशं बहुकालतोऽस्मि लग्नः।

कृपया शनैः प्रकाशय हृदये गुणप्रदीपं

शक्तो यथा भवेयं द्रष्टुं समस्तलोकम्।

अयि शारदे! निनादय वीणां ...................

हृदयाङ्गणे न यावत् प्रीतेः पदं ददासि

तावद् भवन्नपूज्यः क्वचिदप्यहो! न भाति।

महिमानमादधासि परमं यदीह लोके

ध्यायन्नपि स्थितोऽहं कस्मादनन्तशोके॥

अयि शारदे! निनादय वीणां ...................

मुखमण्डलं त्वदीयं कीर्यत्प्रभावितानं

जायेत हन्त! यस्मात् सुधियां नवं विधानम्।

दृष्टिं ददासि चेत् त्वं सृष्टिं करोत्यवश्यं

बालोऽपि बोधशून्यो ज्ञातुं क्षमो रहस्यम्॥

अयि शारदे! निनादय वीणां ...................



# २

## गुरूपदेशः



सदा सत्यमार्गं श्रयध्वं श्रयध्वं
परोत्कर्षकार्यं कुरुध्वं कुरुध्वम्॥

जगन्नामकेऽस्मिन् वने जीवने वः

कृते नैव कुत्रापि सौख्योपलब्धिः।

अकम्पो यथाऽस्ति स्थितोऽयं हिमाद्रिः

तथैवेह सर्वं सहध्वं सहध्वम्॥

सदा सत्यमार्गं श्रयध्वं श्रयध्वम् ..............

सदोपेक्षितानां तथा निर्धनानां

धनोन्मत्तसन्त्रासशूलाहतानाम्।

स्ववात्सल्यपूरैः कटाक्षैरजस्रं

सुखस्यानुलेपं कुरुध्वं कुरुध्वम्॥

सदा सत्यमार्गं श्रयध्वं श्रयध्वम् ..............



जगन्मण्डलेऽस्मिन् समन्तादिदानीं
समुत्कीलितो वञ्चनाच्छद्मजालः।
प्रयासैः निजैः सत्वरं तत्र सत्य-
ध्वजस्थापनार्थं यतध्वं यतध्वम्॥
सदा सत्यमार्गं श्रयध्वं श्रयध्वम् ..............

युगं सर्वथेदं नवीनायमानं
भयोत्पादकं लक्ष्यते ध्वंसनोत्कम्।
अतोऽज्ञानतो ज्ञानदीपप्रकाशैः
स्वकान् सत्यमार्गं नयध्वं नयध्वम्॥
सदा सत्यमार्गं श्रयध्वं श्रयध्वम् ..............

यशः प्रोज्ज्वलं भारतीयं पुनः स्यात्
प्रकाशेत येनाऽखिलो विश्वमञ्चः।
भवेदस्य लक्ष्यस्य सिद्धिर्न यावद्
जनेभ्यः प्रवाचं ददध्वं ददध्वम्॥
सदा सत्यमार्गं श्रयध्वं श्रयध्वम् ..............



3

# मातुलचन्द्र !



ब्रूहि त्वं मातुलचन्द्र! किमर्थं दूरे मत्तः

समालिङ्गितुं समीहे चिरात् त्वत्सौख्यविरक्तः॥

कथं नोदेति मतिस्ते समागन्तुं मद्गेहे
विवादं मातुः कृत्वा स्थितो यद्दूरे देशे।
जडो वाऽकारुणिको वा किमथवाऽत्यन्तं क्रूरः
यथा लाल्येऽस्मिन् बाले कृते यत्नेऽपि न दयसे
ब्रूहि त्वं मातुलचन्द्र! ..............

कदाचित् कायेन त्वं क्षीयसे मन्दं मन्दं
कदाचिद् वृद्धिं लब्ध्वा नभसि चरसि स्वच्छन्दम् ।
कथं परिवर्तसे त्वं द्रुतं विविधं निजरूपं
रहस्यं द्रागुक्त्वा रे! कुरु मे स्वस्थं स्पन्दम्।
ब्रूहि त्वं मातुलचन्द्र! ..............

नृपोऽभूः तारकाणां कथा चेत् कास्ति प्रजानां
कियद् विस्तीर्णं क्षेत्रं तवास्ते सौराज्यानाम्।
कथं नालक्ष्यसे त्वं दिवसकाले सम्प्राप्ते
कुतो रात्रौ समुदेषि कथय सारं तत्त्वानाम्॥
ब्रूहि त्वं मातुलचन्द्र! ..............



# ४

# डयते कथमाकाशे?



मातः मातः! भूमितलाद् रे
डयते कथमाकाशे? ।

इदं विमानं कुतुकं कुर्वद्

जनजनमनोनिवासे ॥

आलोके निपतति खलु सूक्ष्मं

मत्तो दूरगतं तत्।

धरामुपरितोऽवतरद् मातः!

ब्रूहि कियद् बृहदेतत्? ॥

यानेऽस्मिन् तिष्ठन्ति निर्भयाः

कथं यात्रिणो मातः!।

सोऽवश्यं स्यात् कश्चिद् वीरः

योऽस्य चालको जातः॥



किं पश्यन्तो यान्ति नभस्थान्
सुरान् तथाऽप्सरसस्ता: ? ।
कथय रहस्यं यानगतानां
शङ्का येन निरस्ता ॥



## ५

# विमला त्रिरङ्गा



पुण्यैः प्रहर्षति सदाऽखिलमानवानां
मेघागमैरिह यथा विपिने मयूरी।
लोकोदयं स्वहृदि या वहते पताका
सा सम्विभातु सततं विमला त्रिरङ्गा॥

आद्ये क्रमे स्थितिवशात् स च केशराख्यो
वर्णः करोति तिलकं नभसो हि यस्याः।
प्रागौरवं प्रथयते विपुलं समृद्धिं
सा भातु भारतभुवो विमला त्रिरङ्गा॥

मध्ये स्थितो धवलतां वितनोति वर्णः
श्वेतः सचक्रमहितोऽधिभुवं भुवोऽस्याः।
शान्तिं प्रसारयति सर्वजनान्तिकं सा
दोधूयतामविरतं विमला त्रिरङ्गा॥

नीचैर्गतो हरितिमानमलं प्रसूते
शस्यप्रशस्यविभवं हरिताख्यवर्णः।
स्फोरैर्निजैर्विदधती कृषकस्तवं सा
राराज्यतामधिभुवं विमला त्रिरङ्गा॥

वर्णैः विभाति विविधैः यदि सा पताका
राष्ट्रोन्नतिं नयति वह्निरिवाऽधिनाकम्।
वर्णैर्विभक्तपुरुषा अपि नैकधर्मै-
स्तानेकतां दिशति नो विमला त्रिरङ्गा॥



६

# वर्णपरिचयः

**कः कमलम्**



**खः खगं नभस्स्थम्**



गगनं गोऽनुवदति नित्यम्



घ - वर्णो मन्दिरगां घण्टाम्

सर्वान् योपदिशति सत्यम्॥



च: चन्द्रम्





छः छत्रं सुखदम्



जयं हि जः कुरुतेऽधिभुवम्

झञ्झावातं
झः बोधयते
जनयति यो बालके भयम् ॥



ट: टङ्कारं धनुषस्तीव्रम्



ठः ठुमुकं कपिनृत्योत्थम्।



ड: डमरोः डम् डम् डङ्कारम्





डयते कथमाकाशे?

ढः ढक्का मङ्गलवाद्यम्॥



तः तक्रं मात्रा निर्मथितम्



थः ब्रूते हा थूत्कारम्।



द: दण्डं ननु दुष्टजनानाम्



ध: धर्मं जीवनसारम् ॥




न: बोधयति नखं करजातं विना विलम्बं यं नूनम्।
समालेक्य कर्तयसि वर्धितं प्रेम्णा चन्द्राकारं त्वम् ॥



पः पवनं गन्धानां वाहम्



फः फलं नवस्वादभरम्।



बश्च बलं प्रददाति नरेभ्यः



भः भरतं पुरुषार्थकरम् ॥



मः मरणं शाश्वतं समेषां
लोकानां नियतं नियतौ।
भयं विहाय सदा यतनीयं
सर्वैस्तस्यां दिव्यगतौ ॥



यः यज्ञं मुनिवृन्दैः विहितम्



रः च रथं नृपसंयुक्तम्।



लः लवणं बोधयते नित्यम्





वः वणिजं तं विपणिस्थम्॥

शः शङ्खं बोधयते श्वेतम्
पश्यत पण्डितहस्तस्थम्।



षः षट्पदं परागविमूढम्



सः समरं जनवादोत्थम्॥



हः हरिं त्रैलोक्यप्रणम्यम्



क्षः क्षत्रियं कुलोद्धारम्।



त्रः त्रिपुरारिं त्रिशूलवाहम्



ज्ञः ज्ञानं तद् गतपारम्॥



वर्णानां विज्ञानमिदं यः
दधाति कण्ठगतं सततम्।
सोऽधिभुवं सम्मानं लब्ध्वा
कुरुते यशो निजं विततम्॥



७

# विभक्तिप्रयोगविज्ञानम्



रामः रावणनाशकः रघुवरः

रामं भजे शाश्वतम्

रामेण प्रथते चराचरमिदम्

रामाय मे जीवनम्।

रामात् नास्ति परं प्रियो मम कृते
रामस्य भक्तोऽस्म्यहम्
रामे भक्तिरहर्निशं मम भवेत्
हे राम! मां तारय॥



## ८

# वयं बालका भारतपुत्राः

उत्तिष्ठामो ब्राह्ममुहूर्ते स्वाध्यायं कुर्मश्च परम्।
वयं बालका भारतपुत्रा गुणं धरामस्सदा वरम्॥



अल्लां हरिं निजोपास्यं वा ध्यायामो हृदयेन सदा।
पितरौ नत्वा सदा कुर्महे कार्यारम्भं वयं मुदा॥
उत्तिष्ठामो ब्राह्ममुहूर्ते ..........

आदौ योगविधिं रचयामः प्राणायामादिकां क्रियाम्।
माहात्म्येन निराभो देहो ध्रुवं समुद्द्योतते श्रियाम्॥
उत्तिष्ठामो ब्राह्ममुहूर्ते ..........



दन्तधावनादिकं च कृत्यं मातृनिर्मितं सद्भोज्यम्।
कृत्वा विद्यालयं व्रजामोऽध्येतुं मित्रैः वयं समम्॥
उत्तिष्ठामो ब्राह्ममुहूर्ते ..........



भक्तिं दृढां वयं निदधाना देवतीर्थरूपे स्वगुरौ।

प्राप्स्यामोऽमृततत्त्वमवश्यं कामं स्याम स्थिताः मरौ॥

उत्तिष्ठामो ब्राह्ममुहूर्ते ..........



शिक्षार्थं समवेताः सर्वे दूरदेशतः सम्प्राप्ताः

सेवार्थं निजभुवो भवामो नद्धाः याऽस्ति मुनिध्याता॥

उत्तिष्ठामो ब्राह्ममुहूर्ते ..........



६

# जयन्तु वीरसैनिकाः



जयन्तु वीरसैनिकाः लसन्तु वीरसैनिकाः।
रताः स्वदेशरक्षणे जगत्तलेऽधिनायकाः॥
तपन्ति भूरितेजसाऽञ्जसा च ये दिवानिशं
हिमालयेन सन्निभा दृढा भवन्ति कर्मणा।
यथा नु योगिनश्च ते तथैव सैनिका इमे
अखण्डभारतच्छविप्रदर्शनैकमानसाः॥
जयन्तु वीरसैनिकाः ........



गृहे शुका वचोमुचो हरेः कथासुधाजुषो
मुषो गुणान् विदां तथा द्विषो न मानवाय ते ।
रणे धरन्ति तीक्ष्णतां विपक्षपक्षनाशिका-
मभेद्यभेदने क्षमा जयन्तु राष्ट्रगौरवाः॥
जयन्तु वीरसैनिकाः ........



उपस्थितैर्भयङ्करैर्भयैर्विपन्नभारतं
सुरक्षितुं सदैव तत्परा निजाहुतेरपि।
विषं वमन्ति तक्षकास्तथैव गोलिकां खरां
प्रचाल्य शत्रुमानमर्दकाः समस्तसैनिकाः॥
जयन्तु वीरसैनिकाः ........



## १०

# नैव दीनता भवेत्



नैव दीनता भवेत् कदापि नैव याचना
कुर्महे तदीश्वराद् वयं सदैव कामनाम् ॥

कोऽपि शिक्षणात् शिशुः भवेन्न जातु वञ्चितः
हृत्तलप्रसन्नतां व्रजेत् स्वभावसञ्चितः।
सद्गुणद्रुमः फलेत् फलानि राष्ट्रमण्डले
कामयामहे निजामिमामुदारभावनाम्
नैव दीनता भवेत् ..................




मेघगर्जनं यथा तथैव वेदगर्जनं
नो मुखात् समुद्भवेद् जगत्सुखैककारकम्।
संस्कृतिः चकास्तु सोज्ज्वलाऽमला कलापरा
धारयामहेऽनिशं स्वमानसेषु धारणाम्॥
नैव दीनता भवेत् ..................



कोऽपि सैनिको भवेद् रतश्च देशरक्षणे
शिक्षकस्तथाऽपरोऽभियान्त्रिको भिषक् परः।
राजनीतिसत्पदाङ्कितश्च कोऽपि कोविदः
प्रार्थयामहे तदीश्वराद् वयं स्वभावनाम्॥
नैव दीनता भवेत् ..................

उन्नतादरो गुरौ विनम्रताऽपि शिष्टता
देवतासमानमानता भवेदखण्डिता।
स्यात् कुटुम्बकं समस्तमेव राष्ट्रमण्डलं
प्रार्थयामहे तदीश्वराद् वयं स्वभावनाम्॥
नैव दीनता भवेत् ..................

अस्मदीयकर्मणा कदापि कोऽपि नाहतो
मा फलेदसत्यताद्रुमः कदापि कोऽपि च।
या वसुन्धराऽस्ति नैकरत्नदा प्रहर्षिणी
सा सदैव भासतां यथा तथेति कामना॥

नैव दीनता भवेत् ..................

साधुसङ्गतिः प्रचारतां व्रजेद् जगत्तले
बालमानसेषु सन्तु निश्छला गुणाः सताम्।
राष्ट्रगौरवं प्रवर्धतां शुभेन कर्मणा
कामयामहे तदीश्वरात् स्वकीयभावनाम्॥

नैव दीनता भवेत् ..................



# वयं स्वागतं व्याहरामोऽतिथीनाम्

वयं स्वागतं व्याहरामोऽतिथीनाम्
सुमैर्वाटिकानां पयोभिर्नदीनाम्॥
भवन्तोऽस्मदीयैः वचोमात्रभङ्गैः
स्वतः प्रेरिता आगता हृत्तरङ्गैः
अभावो नितान्तोऽत्र सिंहासनानाम्॥

वयं स्वागतं .......... ॥

अमूल्यो भवद्रत्नतुल्योऽस्ति कालः
तथा प्रस्तुतौ हन्त दोषो विशालः
मनोरञ्जने नापि शक्ताः प्रभूणाम् ॥
वयं स्वागतं .......... ॥

न भावोच्छलो निश्छलो वाक्प्रसारः
न भावत्ककण्ठेऽर्प्यते कोऽपि हारः
कृपाबिन्दुसेकोऽस्तु सारस्वतानाम्
वयं स्वागतं .......... ॥

इमे चैन्दवः बिन्दवः स्वेदकानाम्
कथां कुर्वते हन्त दीर्घश्रमाणाम्
गताः स्युः सुमोत्सारणैर्मानदानाम् ॥
वयं स्वागतं .......... ॥

धनाभावतो नाऽत्र कामं महार्घः
स्थितो दिव्यवस्तूच्चयः स्वागतार्थम्
मनःकल्पितैर्भावगुच्छैर्गुरूणाम् ॥
वयं स्वागतं .......... ॥



## १२

# कालियदमनम्



प्रोच्छाल्य प्रोच्छाल्य केशवः

लघुकन्दुकं स्वसखिभिः सह।

यमुनातीरे क्रीडासक्तः

समायोजयति मिथो महः॥

प्राप्तुं केशवकरात् सखायः

तत्कन्दुकं यतन्ते ते।

इतस्ततो धावनकरणादपि
कथमपि नैव लभन्ते ते॥

अहो प्रमादाद् धावनकाले
जले कन्दुकं निपतति तत्।
कथं मिलिष्यति यमुनामग्नं
बालान् प्रीणयते नो यत्॥

मित्राणां कन्दुकपतनाद् यत्
स्फुटितमभूद् दुःखं वदने।
पृच्छां विना द्रुतं तद् हर्तुं
कूर्दति जलेऽच्युतो गहने॥



अद्रौ घने मयूरः श्यामो
राजतितरां यथा विहरन्।
कालियफणे जलाद् निर्गच्छन्
विभात्यसौ कृष्णो नृत्यन्॥

लयेन धम् धम् कृत्वा नृत्यति
वंशीं वादयते मधुरम्।
दृष्ट्वाऽऽगतं सखायः कृष्णं
रचयन्ते गीतं रुचिरम्॥



# १३

## कथमेतद् भवति?



अजा निजाऽत्यन्तं कृष्णा चेत्
कथन्नु तद्दुग्धं धवलम्।
अपि प्रयत्नाद् नो विज्ञातुं
क्षमोऽभवं भेदं जटिलम्॥



हरितं पत्रं भवद् जनन्याः
रचयति रक्तं कथं करम्।
आश्चर्यं वर्धयद् जनेभ्यो
वितरति यन्मोदावसरम्॥

मुष्टौ सर्वं वस्त्वागच्छति
वायुः दूरं कथं परम्।
भङ्गान्वितैः निजैः यो वहनैः
गमयति सुखसागरे नरम्॥

सुजनो दुर्हृदयान् हि जनान् यान्
दिशति च मानवतां सरलाम्।
किन्तु कथं विरमन्ति न पापात्
तुदन्ति ते बालं महिलाम्॥

विना गर्जनं कर्तुं शक्तो
मेघोऽयं वर्षणं शुभम्।
कथं भाययति घोरगर्जनाद्
दयनीयं हा बालसुमम्॥

भवति मानवो बृहदाकारो
विचरत्युन्मुक्ते गगने।
कथन्नु लघु- टी.वी-मध्येऽसौ
स्थातुं क्षमः चिरं सदने॥

मेघेषु च्छन्नश्चन्द्रोऽयं
चन्द्रे वा मेघश्छन्नः।
द्यवि दृष्ट्वा चैतादृशदृश्यं
भ्रमितं मनः कथं तन्नः॥



## १४

# वर्षति मेघः झम् झम् वेगात्



अयि मम मानसगताः सखायः
गृहात् समागच्छत द्रुतम्।
वर्षति मेघः झम् झम् वेगात्
कूर्दित्वाऽऽसादयत मुदम्॥

चपलः सर्सर् वहति समीरो
हरति स देहगतां श्रान्तिम्।
प्राप्स्यामो रे! क्लिन्ना भूत्वा
पुनर्नवां दिव्यां कान्तिम्॥

मोक्ष्यामोऽम्बुकणानञ्जलिभिः
भृत्वा भृत्वा मिथो वयम्।
तनुर्भविष्यति नोऽस्मात् कार्यात्
कम्पं, प्राप्तं यथा भयम्॥

तिष्ठथ यूयं यदि स्वगेहे
भूत्वा भयेन संत्रस्ता।
नैव मिलिष्यति सुखं कदाचिद्
विकसेद् धीः यस्मादस्ता॥



१५

# कथम्



प्रातःकाले कुसुमं नित्यं

विकसति कथं नवम्।

कथं हसित्वा पश्य मिलति रे!

मां त्वां सर्वजनम्

तित्तिलिकाश्च तथा भ्रमरास्ते
चुम्बन्त्यस्य मुखम्।
किन्तु भयं न मनागपि कुरुते
तेभ्यः पुष्पमिदम्॥

पीत्वा पीत्वा भ्रमरा नित्यं
हर्षितमानभराः।
मकरन्दं नवरागकरं तं
जायन्ते प्रसराः॥

वितरति गन्धं सर्वजनेभ्यो
हरते चाऽनुपदम्।
स्वस्य गुणस्य महिम्ना विपुलं
लोकानां विपदम्॥

अम्बरचुम्बिसुरम्यमन्दिरे
देवानां हृदयम्।
विना वैरभावं चुम्बित्वा
पुष्पं यात्युदयम्॥



१८

# पिपीलिका



अन्नकणं नीत्वेयं गच्छति

पिपीलिका लघुरूपा।

यतः कुतश्चित् प्राप्तं भोज्यं

स्वान्तस्थितसन्तोषा॥

पतति च भाराणामाधिक्याद्

उत्तिष्ठति प्रयासात्।

श्रान्तिं नैव मनागपि मनुते
स्फूर्तीनां संयोगात्॥

कार्येऽस्मिन् तां व्यग्रां दृष्ट्वा
पिपीलिकाऽन्या मिलते।
तत्साहाय्यं कृत्वा बन्धो!
हर्षं नवं समयते॥

अत्यन्ताल्पतनुर्भूत्वा चेद्
दृढसूत्रे सा बद्धा।
कथं मानवानामस्माकं
भवेन्मिथो न श्रद्धा॥



# हित्वा कथं वनम्

(नगरागतं गजं प्रति बालकौतुकम्)



हित्वा कथं वनं स्वं नगरम्

आयातोऽसि निरर्थं त्वम्?।

प्राप्स्यसि नाऽत्र तरून् स्याद् येभ्यः

कण्डूतेश्शमनं त्वरितम्॥

नैव हरितपत्राणि मिलन्ते
येभ्यो भवेत् क्षुधो हरणम्।
नैव सुखेन चरिष्यसि विहरन्
सफलं येन तवागमनम्॥

नात्र तडागानां च नदीनाम्
अवगाहनसुलभं सलिलम्।
परिभ्रमन् प्रतिवीथ्यां बन्धो!
पश्यसि समलं हन्त! जलम्॥

आयातो यदि रन्तुं नगरं
पूरय मनोऽभिलाषं स्वम्।
गत्वाऽरण्यं पुनर्न बन्धो!
विस्मर मादृशमित्रं त्वम्॥



## १८

# प्रहेलिका

दिने स्वपिति निश्चिन्तं गाढं
किन्तु निशायां रोदिति यत्।
यावद् रोदिति तावद् याति
क्षयं कथय बन्धो! किं तत्॥

समवाप्नोति सदा सम्मानं
चेत् स्यान्मन्दिरमध्यस्थः।
तिरस्कृतः स भवेन्मार्गस्थः
वक्ष्यति यः सोऽस्ति स्वस्थः॥

तैलं विना ज्वलति लोकेऽस्मिन्
विहरति सदा विना पादम्।
समाधाय निजबुद्ध्या प्रश्नं
प्राप्नुहि सुखं चिरं हार्दम्॥

बाला अपि कथयन्ति मुदा यं
युवकाः तथा च वृद्धजनाः।
यं ब्रूते माताऽपि मातुलं
ब्रूहि स को मां शान्तमनाः॥

एकं कृष्णवर्णकं पुष्पं
मानवशीर्षस्थं राजति।
अयते घोरातपे विकासं
छायायां किन्तु म्लायति॥

रुग्णा नैव भवामि कदाचिद्
भक्षयामि गोलिकां परम्।
बिभ्यति बाला वृद्धाः सर्वे
श्रुत्वा मे तद्-रवं खरम्॥

कृष्णं मुखं शरीरं रक्तं
खादति तत् कर्गदं सदा।
प्रतिसन्ध्यं प्रविदार्य तदुदरं
स्मयते नयते जनो मुदा॥

पक्षं विना समुड्डयते यद्
वायोः यानं किन्तु न तत्।
अटत्यहो! विश्वेस्मिन् विश्वे
किं जानासि सखे! चैतत्॥

न खादामि पिबामि रे बन्धो!
स्वप्नस्थोऽपि न किमप्यहम्।
रक्षामि प्रतिगेहं नित्यं
द्रुतं वद त्वं किमस्म्यहम्॥

स्थले च गृह्णाति त्वत्पादं
जले करं तावकं तथा।
मृत्वाऽपि जीवद्भिः पुरुषैः
समं वसति किं ब्रूहि मुदा॥

---

उत्तराणि –

१. मोमवर्तिका २. प्रस्तरः ३. सूर्यः ४. चन्द्रमातुलः (चन्दा मामा) ५. छत्रम्

६. भुसुण्डिका ७. लैटरबाक्स ८. मेघः ९. तालकम् १०. उपानह्।



## १९

# अतिलोभिनी बिडाली



भवति बिडाली सखेऽतिचतुरा
वञ्चनकर्मणि सिद्धा सा।
शनैः शनैः निजपादविलासाद्
मूषकान् गिलति हत्वा या॥



अतिलोभाद् निजदोषात् प्राप्ता
सा चैकदा सुरेशगृहम्।
करके पात्रे दृष्ट्वा दुग्धं
मुखं क्षिपति शनकैः स्वीयम्॥

तस्या मुखमवरुद्धं तस्मिन्
सहसा लघुकरके पात्रे।
शक्ता मोक्तुं नहि यत्नादपि
करुणं क्रन्दति सा मात्रे॥

इतस्ततो धावति कूर्दति सा
म्याऊ म्याऊ रौति गृहे।
अतः परं न करिष्ये लोभं
कामं दुःखं क्षुधः सहे॥

दृष्ट्वा रामः तां संत्रस्ताम्
आकारयति सुरेशं स्वम्।
रक्षायै निजबुद्ध्या तस्या
गृह्णीतः कम्बलं नवम्॥



उच्छालयतस्तस्या देहे
कम्बलवस्त्रं प्रयत्नतः।
पात्राच्छनैर्बहिः कृत्वा ता-
मटितुं प्रेम्णा मोचयतः॥

आत्मानं यमगृहात् प्रमुक्तां
मत्वा धावति बहुवेगैः।
ताभ्यां धन्यवचो वितरन्ती
सन्तुष्टाऽभूद् विधियोगैः॥



# अयि! चञ्चल! रे! मशक! भ्रातः!



अयि! चञ्चल! रे! मशक! भ्रातः!
प्रादुर्भवसि गृहे त्वं कस्मात्।
चेदसि बन्धुः ब्रूहि कथं मे
रक्तं चूषसि कोमलदेहात्॥

भूत्वा रात्रौ वपुषि च लीनः
पीत्वाऽप्यसि नहि रक्तं पीनः।
रोगेण ग्रस्तः किं बन्धो!
संलक्ष्यसे यतोऽङ्गैः दीनः॥

दयसे दिने निजेऽस्मिन् बन्धौ
दशसि सखे! त्वं नाऽस्मद्देहम्।
किन्तु किमर्थं प्रहरसि रात्रौ
समाख्याय मे हर सन्देहम्॥



# सखि! रे श्रावणमासः प्राप्तः



सखि! रे श्रावणमासः प्राप्तः दोलां दोलय रे मन्दम् [२] ॥
बहुदिवसानां गमनेनायम् ऋतुराजः सम्प्राप्तः।
क्षणमपि यापय मा रे! व्यर्थं कालो बहुः समाप्तः॥
सखि! रे श्रावणमासः प्राप्तः .........

क्रुध्यति माता नैव पिता च खेलाकर्मविलम्बात्।
लालयते सकलोऽपि जनो नो मासस्याऽस्य नु सङ्गात्॥
सखि! रे श्रावणमासः प्राप्तः .........

भ्रातृकृते मासा नैके स्युः किन्तु कृते नोऽस्त्येकः।
भगिनीभ्यो मोदं वितरति रे! यथा हृदः स्यात् सेकः॥
सखि! रे श्रावणमासः प्राप्तः .........



कोपिष्यति चेद् भ्राताऽस्मान् प्रति तदपि न किञ्चित् नः स्यात्।
रक्षासूत्रं नो तद्हस्ते बध्नीमो निजकोपात्॥
सखि! रे श्रावणमासः प्राप्तः .........



## २२

# दुग्धं बुद्धिबलं दत्ते



मातः! दुग्धं धेनुं दुग्ध्वा
मोहनाय मत्तोऽप्यधिकम्।
सदा प्रयच्छसि पात्रं भृत्वा
किन्त्वल्पं मह्यं च कथम्? ॥

दुर्बलतनुर्मदीयं मातः!
मोहनस्य पीनं तु महत्।
अहं समीहे पीत्वा भवितुं
सर्वबलिष्ठो दुग्धं तत्॥

आयुर्घृतं तनोत्यस्माकं
दुग्धं बुद्धिबलं दत्ते।
दूरे स्वं वत्सं गौः दृष्ट्वा
सा हम्भां हम्भां कुरुते॥



२३

# पिकगुणधरा भवामः



कृष्णोऽयं काकः कुरुते रे!

काव-काव-कटुनादम्।



पिकोऽपि कृष्णः किन्तु स हरते
कुहु-कुहुकैरवसादम्॥

एकं दृष्ट्वा कथं विरक्तः
सकलोऽयं ननु लोकः।
श्रावं श्रावं किन्तु परं तं
भवति स एवाऽशोकः॥

वयमपि बालाः तथैव लोके
पिकगुणधरा भवामः।
लब्ध्वा येनादरं हि लोकात्
कुलं निजं सुखयामः॥



# २४

## प्रकृतिः



वितरति सुखं सदेयं प्रकृतिः
हरति मनोमालिन्यं प्रकृतिः॥



उपकाराय समेषां नद्यः
प्रवहन्त्यहो! मनोज्ञा प्रकृतिः।
स्वादु फलं विविधं गुणयुक्तं
वृक्षा ददत्युदारा प्रकृतिः॥

धरा शुभाऽन्नं स्वान्तर्गर्भा-
दुत्पादयत्यपारा प्रकृतिः।
नवं नवं च रसायनतुल्यं
वस्तुचयं वितरति नः प्रकृतिः॥

वायुः प्राणवतो नः कुरुते
सञ्चलनेन सुरम्या प्रकृतिः।
निजाऽऽलोकतो रविर्वदान्यो
नयति सुमार्गं लोकान् प्रकृतिः॥

एवम्भूतगुणा कल्याणी
सकलजनैः सेव्या चेत् प्रकृतिः।
विकृतिं यथा न यायात् लोके
तथेह संरक्ष्येयं प्रकृतिः॥



## २५

# घटिका




टिक् टिक् चलति सदेयं घटिका
कालमहत्त्वं प्रथयति घटिका ॥
उत्थातुं कालः कः नः स्यात्
दिशति शयनरहितेयं घटिका ॥

अवलम्बन्ते निजकार्यार्थम्
सर्वे यां सा जयति च घटिका॥

सह समयैश्चलितुं लोकेभ्यो
नीतिं वितरन्तीयं घटिका॥

विना विरामं कार्यं कर्तुं
नरान् दिशति चलनैः स्वैः घटिका॥



## २६

# पुस्तकगुहाप्रवेशः



पश्यत खगशालायामस्यां
दीर्घायां विलसन्ते।
पञ्जरगताः कठोराः सिंहाः
येऽस्मन्मनो हरन्ते॥



क्वचिद् वानराः कृत्वोच्छलनं
शाखायां मोदन्ते।
गजाः स्वशुण्डादण्डैर्भृत्वा
जलं मिथो विहरन्ते॥

मृगाः क्वचिद् वा शशाः क्वचिद् वा
उत्प्लुत्या कूर्दन्ते।
क्वचिच्च विविधा विहगास्ते ते
गाने नवे यतन्ते॥



यथा पक्षिशालेयं रम्या
त्वत्सम्मोदप्रदाऽस्ति।
तथैव पुस्तकगुहास्ति चैका
या ज्ञानं वोऽनुशास्ति॥

सा रूपेणाऽत्यन्तं श्लक्ष्णा
स्थिताऽपि चास्ति विशाला।
प्रविशति योऽस्यां स्वकीयबुद्ध्या
धत्ते गले स माला:॥

पुस्तकगुहाप्रवेशाद् बाला
ज्ञानं नवं लभन्ते।
पशुपक्षिणां विचित्रं चित्रं
दृष्ट्वा ते मोदन्ते॥



क्वचिच्च विज्ञानं बहुगूढं
यात्रा तथाऽन्तरिक्षे।
ज्ञात्वा तत् तद् वस्तुवितानं
प्रख्याताः स्युर्देशे॥



# तदेव भारतम्

सदा सहिष्णुताप्रशिक्षणोन्मुखं दृढस्थितं
सुरोच्चयस्वजन्मशोभितं गुणैकमन्दिरम्।
अभद्रमार्गसंस्थिताऽन्धकारहारकं च यद्
जयेदशेषविश्ववन्दितं तदेव भारतम्॥



अनेकसम्प्रदायसंविभक्तमानवोच्चयो
निजैकतां प्रदर्शयन् न लक्ष्यते पृथक् पृथक् ।
यदङ्कसम्भवो जनो विनैव शिक्षणाद् गुरो-
रनेकविद्यया युतो जयेत् तदेव भारतम्॥



विलोक्य यत्कदर्थनं पुरा च यत् प्रकम्पनं
विषद्रुमोपमैः विदेशशासकैः प्रसारितम्।
सुभाषचन्द्रशेखरादिभिश्च गान्धिबिस्मिलैः
स्वतन्त्रताश्रिया विभूषितं तदेव भारतम्॥



यदीयपादपङ्कजं सुधोपमैः कणैरपां
प्रमार्ज्य तन्नदीगणोऽपि तोषमादधाति च।
यदुज्ज्वलाभया प्रकाशतेऽनिशं जगत्तलं
महीयते जगद्गुरूपमं तदेव भारतम्॥



२८

# आगतानि संस्कृतस्य दिनानि

ज्ञानराशिपूरितं सुनीतिमार्गदायकं
सौम्यतत्त्ववर्धकं तृतीयनेत्रकारकम्।
साधुभिर्विभूषितं यदस्ति तत् सुधोपमं
संस्कृतं लसेत् सदा जने जने गृहे गृहे॥



यत्र पाञ्चजन्यनादवेदमन्त्रगर्जनं
सारगर्भितोच्छलद्वच:प्रवाहमाधुरी।
यत्र सम्प्रपूज्यते वयोऽधिको जनो जनै:
तादृशं लषाम्यहं पुन: पवित्रभारतम्॥

दृश्यते नरो यथा प्रपीडितो भवन् क्षमो
मूर्च्छितं तथेह संस्कृतं नु पीडया पुरा।
किन्तु दुर्दिनं गतं सखेऽधुना समन्तत:
आगतानि भारते दिनानि संस्कृतस्य न:॥

ज्ञानदानसाधना महर्षिभि: प्रकल्पिता
सौम्यमानसै: नृणां हिताय सम्प्रसारिता।
फुल्लपङ्कजैर्यथा प्रयाति गौरवं सरो
भाति संस्कृतेन नस्तथैव भव्यभारतम्॥

भाति गीतकालमध्यवेणुकेव यच्छुभं
राजते मयूरवद् मधौ मधुव्रता इव।
मोक्षमार्गबोधकं निराश्रयाश्रयप्रदं
नृत्यतेऽधुना तथैव भारते हि संस्कृतम्॥



## २६

# शशकच्छपकथा



एकः शश एकश्च कच्छपः

वने वसन्तावास्तां तौ।

तयोः श्रूयतां कथा पुराणी

सुखप्रदा या मेऽस्ति मतौ॥

ग्रस्तः सन्नपि भाराधिक्याद्
देहस्य कच्छपोऽल्पधीः।
कार्ये निजे विलम्बं कुरुते
नैव मनागपि यथा सुधीः॥

स्फूर्तोऽसौ शशको गौराङ्गः
उत्प्लुत्या धावतेतराम्।
गर्वं स्वीयैः गुणैः स कुरुते
हसति सदैवान्यं नितराम्॥

संयोगादेकस्मिन् दिवसे
क्वचित् कच्छपो याति यदा।
अनिवार्यं साधयितुं कार्यं
दृष्टोऽसौ शशकेन तदा॥

कुत्र यासि वेगेन सखे! त्वं
त्यक्त्वा वनं तथाऽऽत्मजनान्।
चेत् काचित् पीडा स्याद् वसतः
करोम्यहं रक्षोपायान्॥

व्याजगर्भवचनं श्रुत्वाऽसौ
कथयति तं चपलं शशकम्।
चिरवासोद्वेजनं शमयितुं
याम्यपरं पार्श्वस्थवनम्॥

शशको ब्रूते यदि गच्छसि रे!
मनोरञ्जनं कर्तुं स्वम्।
कथं न कुरुषे स्पर्धां मत्तः
भवेद् यतस्ते सुखं नवम्॥

अयं विचारः तेऽस्ति समुचितः
स्पर्धायै सन्नद्धोऽहम्।
कथय सखे! करणीयं किं स्यात्
यथा भवेद् मम हृदयसुखम्॥

कच्छपवचो निशम्य स शशकः
प्रस्तौति स्पर्धाकृत्यम्।
अपरे वने यदस्ति मन्दिरं
तत् स्पृष्ट्वा कार्यं नृत्यम्॥

भ्रमणं वाञ्छसि भविता भ्रमणं
यत्र मुदं प्राप्तुं व्रजसि।
किन्त्वनया क्रियया रे मोदं
सखे! द्विगुणितं प्राप्नोषि॥



स्पर्धा धावनरूपा जाता
मध्ये तयोः समारब्धा।
स्वां स्वां परां प्रतिष्ठां प्राप्तुं
गता द्वयोः हृदयात् श्रद्धा॥

उत्प्लवनेन स शशकः शीघ्रं
लक्ष्यसमीपं सम्प्राप्तः।
दूरतरं कच्छपं च दृष्ट्वा
नितरां सन्तुष्टो जातः॥

अलसोऽयं शशकः चिन्तयते
कच्छपराजो दूरस्थः।
तर्हि कथं क्षणमात्रं कालं
नये निद्रया नेहस्थः॥



पश्चाद् गाढं शेते शशकः
नैव विबोधं लभते सः।
शनैः शनैः किन्तु स्वं लक्ष्यं
तरति कच्छपः तुच्छो यः॥

सहसोत्तिष्ठति सुप्त्वा शशकः
धावति लक्ष्यं स्वं प्राप्तुम्।
शयनात् कामं बहुः विलम्बः
क्षमो न किन्तु जयं हातुम्॥

अमुं विचारं हृदये कुर्वन्
यदाऽधियाति स निजलक्ष्यम्।

तत्र कच्छपं किन्तु पूर्वतः
दृष्ट्वा स्मरति वचः पथ्यम्॥

अहं पराभूतो यो जातः
हेतुर्मेऽस्त्यालस्यरिपुः।
ग्रस्तः तेन न शक्तः कर्तुं
किञ्चिदपि स्यात् स्वयं प्रभुः॥

यदि कश्चित् सततं निजकार्ये
निरतः स्यात् तुच्छोऽपि जनः।
श्रममाहात्म्यसफलतां लब्ध्वा
हरति स नूनं लोकमनः॥

मित्रकच्छपं जितं स मत्वा
आलिङ्गति हृदयेन शशः।
श्रमो जयति विदितोऽहं बन्धो!
दृष्ट्वोपात्तं त्वया यशः॥



# समस्तविश्वमण्डले

(विश्वपर्यावरणं प्रति शान्तिकामना)



सुखप्रदायिनो द्रुमा लताश्च पुष्पवाटिकाः
लसन्तु ते फलैर्युताः समस्तविश्वमण्डले॥

नवामृताम्बुदायकाः कलं कलं सरिद्गणाः
वहन्त्वबाधितोत्सवाः समस्तविश्वमण्डले॥



स्वदेशगौरवच्छलै रताश्च कूजने पिका:
नवं नवं द्रुमं श्रिता: समस्तविश्वमण्डले॥

स्थिताश्च पर्वता गुणोन्नता: स्वत: प्रमाणिता:
शिवं किरन्तु ते स्थिरं समस्तविश्वमण्डले॥

वनस्पतिस्तथौषधी फलोच्चया: सुमोच्चया:
धरोद्भवा भवन्तु ते समस्तविश्वमण्डले॥

लसेदशेषभूरियं महेशशेषरक्षिता
अनन्तकोटिविस्तृता समस्तविश्वमण्डले॥

घन: प्रवर्षतु स्वत: धरा यथा प्रहर्षिता
शिवं तनोतु शाश्वतं समस्तविश्वमण्डले॥



# गीतानाम् अकारादिक्रमः

अजा निजाऽत्यन्तं कृष्णा

अन्नकणं नीत्वेयं गच्छति

अयि चञ्चल रे मशक भ्रातः!

अयि मम मानसगताः सखायः!

अयि शारदे! निनादय

उत्तिष्ठामो ब्राह्ममुहूर्ते

एकः शश एकश्च कच्छपः

कः कमलं खः खगं नभस्थम्

कृष्णोऽयं काकः कुरुते रे

जयन्तु वीरसैनिकाः

ज्ञानराशिपूरितम्

टिक् टिक् चलति सदेयं घटिका

दिने स्वपिति निश्चिन्तं गाढम्

नैव दीनता भवेत्

पश्यत खगशालयामस्याम्

पुण्यैः प्रहर्षति सदाऽखिलमानवानाम्

प्रोच्छाल्य प्रोच्छाल्य केशवः

प्रातःकाले कुसुमं नित्यम्

ब्रूहि त्वं मातुल चन्द्र!

भवति बिडाली सखेऽतिचतुरा

मातः मातः! भूमितलाद् रे

मातः दुग्धं धेनुं दुग्ध्वा

रामः रावणनाशकः रघुवरः

वयं स्वागतं व्याहरामोऽतिथीनाम्

वितरति सुखं सदेयं प्रकृतिः

सखि! रे श्रावणमासः प्राप्तः

सदा सहिष्णुताप्रशिक्षणोन्मुखं दृढस्थितं

सदा सत्यमार्गं श्रयध्वं श्रयध्वम्

सुखप्रदायिनो द्रुमाः

हित्वा कथं वनं स्वं नगरम्





डॉ. राजकुमार मिश्र सम्प्रति साहित्य विभाग, हरियाणा संस्कृत विद्यापीठ, पलवल, हरियाणा में असिस्टेन्ट प्रोफेसर के पद पर कार्यरत हैं। आपका जन्म 26-07-1981 को उत्तर प्रदेश के वाराणसी जनपद में कठिरांव ग्राम में हुआ। आपने सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी से आचार्य तथा पीएच.डी. की उपाधि प्राप्त की तथा विश्वविद्यालय अनुदान आयोग, नई दिल्ली (यू.जी.सी.) से क्रमशः तीन बार नेट परीक्षा उत्तीर्ण की। आपका अध्ययन प्राचीन संस्कृत साहित्य तथा अर्वाचीन संस्कृत साहित्य में है।

**प्राप्त सम्मान** - 1. साहित्य अकादमी युवा पुरस्कार 2013, 2. विशेष सम्मान 2013, उत्तर प्रदेश संस्कृत संस्थान, उत्तर प्रदेश। 3. अखिल भारतीय लघु नाटक प्रतियोगिता सम्मान 2014, उत्तराखण्ड संस्कृत अकादमी, हरिद्वार।

**प्रकाशित कृतियाँ** - 1. भारतभूषणम्
2. "चन्द्रालोक" द्वितीय खण्ड, सहलेखन
3. "चन्द्रालोक" तृतीय खण्ड, सहलेखन

ISBN 978-93-83559-57-2

## हमारे द्वारा प्रकाशित महत्त्वपूर्ण ग्रन्थ

| ग्रन्थ | लेखक | मूल्य |
|---|---|---|
| शुक्लयजुर्वेदीय इष्टिप्रयोगः | प्रो० रमेशचन्द्र दाश शर्मा | 450.00 |
| महर्षिकात्यायनप्रणीतं यजुर्विधानसूत्रम् | प्रो० रमेशचन्द्र दाश शर्मा | 475.00 |
| शुक्लयजुर्वेदीय पार्वण श्राद्धप्रयोग | प्रो० रमेशचन्द्र दाश शर्मा | 35.00 |
| श्राद्धसंग्रह | डॉ० विष्णुपद गोस्वामी | 800.00 |
| श्रीमद्विठ्ठलदीक्षितप्रणीता कुण्डमण्डपसिद्धिः | डॉ० वृन्दावन दाश | 35.00 |
| कमलाकरभट्टविरचितः पूर्तकमलाकरः | डॉ० वृन्दावन दाश | 275.00 |
| मनोऽभिलषितव्रतानुवर्णनम् | डॉ० रामराज उपाध्याय | 750.00 |
| वेदार्थ-निर्णये निरुक्तस्य महत्त्वम् (निरुक्त-परिचयः) | आ. वीरभद्रशर्मा शास्त्री | 395.00 |
| शाण्डिल्यशतकम् (Sanskrit, Hindi & English) | डॉ० कृष्णचन्द्र त्रिपाठी | 40.00 |
| शतकचतुष्टयम् (Sanskrit & Hindi) | प्रो० केशवराम शर्मा | 175.00 |
| हिमाचलवैभवम् (Sanskrit & Hindi) | प्रो० केशवराम शर्मा | 325.00 |
| देविचरितम् (खण्डकाव्यम्) | आचार्यसुरेश शर्मा "भारद्वाज" | 295.00 |
| लघुशब्देन्दुशेखरः श्रीशङ्करभट्टविरचितः शाङ्करी | डॉ० जयकान्तसिंह शर्मा | 325.00 |
| समासशक्तिसमीक्षा | डॉ० जयकान्तसिंह शर्मा | 265.00 |
| शब्दशक्तिप्रकाशिकासमीक्षणम् (मूलजागदीशीसहितम्) | डॉ० विष्णुपदमहापात्रः | 795.00 |
| तर्कामृतम् (म.म.जीवनकृष्णतर्कतीर्थकृतविवृतिसहितम्) | डॉ० विष्णुपदमहापात्रः | [illegible] |
| न्यायपारिभाषिकशब्दावलिः (Sanskrit & English) | डॉ० विष्णुपदमहापात्रः | 375.00 |
| तत्त्वज्ञानविवृद्धिः | डॉ० कमलेशमिश्रः | 225.00 |
| साहित्यकण्टकोद्धारपरिशीलनम् | डॉ० धर्मानन्दराउतः | 495.00 |
| विष्णुविलासविमर्शः | डॉ० (श्रीमति) एस. रा[illegible] | 495.00 |
| व्याकरणदर्शने शब्दतत्त्वविमर्शः | डॉ० कमला भारद्वाज | 625.00 |
| संस्कृतवाङ्मये जलविज्ञानम् | डॉ० कमला भारद्वाज | 625.00 |
| योगामृतम् | डॉ० महेशप्रसाद सिलोड़ी | 495.00 |
| सांख्यसुधा | डॉ० महेशप्रसाद सिलोड़ी | 625.00 |
| दार्शनिकनिबन्धाः | डॉ० सुकान्त कुमार सेनापति | 475.00 |
| श्रीसर्वेश्वराचार्यविरचित साहित्यसारः (सानुवादटिप्पण्यादिसहितः) | डॉ० कामना शर्मा | 575.00 |
| छान्दोग्योपनिषत्तत्त्वसमीक्षा | डॉ० शान्तिपोखरेल | 450.00 |
| वृक्षविज्ञानम् | डॉ० ज्योत्स्ना मोहन | 625.00 |
| स्मृतियों का वातायन | डॉ० ज्योत्स्ना मोहन | 600.00 |
| भारतीय वास्तुविद्या के वैज्ञानिक आधार | डॉ० बिहारी लाल शर्मा | 650.00 |
| मुहूर्तविवेचनम् | डॉ० परमानन्द भारद्वाज | 165.00 |
| फलितज्योतिष के कतिपय आधारभूत सिद्धान्त | डॉ० परमानन्द भारद्वाज | 355.00 |
| शैक्षिक दर्शन (महात्मागांधी एवं विनोबाभावे के विशेष संदर्भ में) | डॉ० नरेश कुमार यादव | 325.00 |
| विमला संस्कृतमार्गदर्शिका (B.Ed., U.G.C., NET) | डॉ० भागीरथि नन्दः | 250.00 |
| अर्थशास्त्र-शिक्षण | डॉ० सदन सिंह | 600.00 |
| व्यंग्य आरोही (कुछ जग के, कुछ रब के, ये व्यंग्य सब के) | डॉ० नरेश कुमार यादव | 150.00 |
| व्यंग्य आरोही - 2 (कुछ इधर की, कुछ उधर की) | डॉ० नरेश कुमार यादव | 250.00 |
| काव्य-तरङ्गिनी | शान्ता गुप्ता | 110.00 |
| बहुआयामी व्यक्तित्व (डॉ० हरिश्चन्द्र गुप्ता) | शान्ता गुप्ता | 200.00 |
| अष्टसिद्धि नवनिधि के दाता हनुमच्चरित्र (एक विहङ्गम दृष्टि) | डॉ० गुह्येश्वराचार्य | 450.00 |
| धर्मलक्षणविमर्शः | डॉ० सुधांशुभूषणपण्डा | 265.00 |
| गौतमधर्मसूत्रार्थविमर्शः | डॉ० सुधांशुभूषणपण्डा | 495.00 |
| बोधनपद्धतिः - समीक्षा (A Criticism of Teaching Method) | डॉ० रामचन्द्रलु बालाजी | 250.00 |
| कारिकामयूखः (कौमुदीस्थानां कारिकाणां सप्रसङ्गव्याख्यानम्) | प्रियव्रतमिश्रः | 225.00 |
| प्रायोगिकं सांख्यम् | डॉ० सुकान्त कुमार सेनापति | (यन्त्रस्थ) |
| व्याकरणदर्शनदीपिका | डॉ० प्रमोद कुमार शर्मा | (यन्त्रस्थ) |
| Jayanti Bhatt NYAYAMANJARI | Dr A.S.Aravamudan | (In Press) |
| अद्वैतशब्दार्थमञ्जूषा | डॉ० दिलीप कुमार कर | 575.00 |
| श्रीनृसिंहमिश्रकृतम् सामवेदीयकर्मविधानम् समापवर्तनान्तम् | डॉ० दिलीप कुमार कर | 150.00 |
| कृतिवैभवम् Kṛtivaibhavam | डॉ० दिलीप कुमार कर | 375.00 |
| पञ्चटीकोपेतः शक्तिवादः | डॉ० विष्णुपदमहापात्रः | (यन्त्रस्थ) |
| व्याकरणप्रकाशः | डॉ० विष्णुपदमहापात्रः | (यन्त्रस्थ) |
| भविष्यपुराण में व्रत एवं अनुष्ठान | डॉ० सरोज कुमार शुक्ल | (यन्त्रस्थ) |
| वेदेषु समन्वयवादः | डॉ० सूर्यनारायणनन्दः | (यन्त्रस्थ) |
| ज्योतिर्विज्ञान परिचय एवं उपादेयता | डॉ० विनोद कुमार शर्मा | (यन्त्रस्थ) |
| मुहूर्त-चिन्तामणि 'विवाह-प्रकरणम्' | प्रो० प्रेम कुमार शर्मा | (यन्त्रस्थ) |
| कात्यायन शुल्वसूत्रम् | प्रो० रमेशचन्द्र दाश शर्मा | (यन्त्रस्थ) |
| व्रतों से रोगनिवारण | डॉ० रामराज उपाध्याय | (यन्त्रस्थ) |
| जनसंख्या शिक्षण | डॉ० सदन सिंह | (यन्त्रस्थ) |
| उत्तरी बिहार का पुरातत्त्व | डॉ० अशोक कुमार सिन्हा | (यन्त्रस्थ) |
| Elite Woman of Mughal India | Dr. Bharti Mohan | (In Press) |





# मान्यता प्रकाशन

60 - C, मायाकुञ्ज, मायापुरी, नई दिल्ली-110064
Phone : 011 - 2540 7546, 011 - 2513 7546
Mobile :+ 91 - 9999 88 9290, 98110 14522
mail at : manyataprakashan@gmail.com
mail at : manyata_prakashan@yahoo.com

इयते कथमाकाशे ?
ISBN 13 9789383559572
9 789383 559572